इतरेतरम् । स्त्रीनपुंसकयोरुत्तरपदस्य[1] वा आम्भावो[2] वाच्यः[3] । अन्योन्यां[4] परस्परामितरेतरां वा[5] इमाः स्त्रियो भोजयन्ति कुलानि वा । पक्षे अन्योन्यमित्यादि । तृतीयादिषु पुंवत् ॥

---

स्त्रीनपुंसकयोरिति । स्त्रीनपुंसकयोर्यत् सर्वनाम कर्मव्यतिहारे वर्तते तस्योत्तरपदस्य या विभक्तिस्तस्याः स्थाने आम्भावे वा वक्तव्य इत्यर्थः । अन्योन्यां परस्परामिति । द्विर्वचनं विभक्तेराम्भावः पूर्वपदस्य स्युः । पक्षे अन्योन्यमित्यादीति । स्त्रियां समासवद्भावात् सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति टापो निवृत्तिः । स्पष्टत्वात् त्यक्तं सूत्रत्रयं व्याख्यायते । 'अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्' ॥८।१।१३॥ अप्रयासे प्राणिधर्मेऽर्थे वर्तमानयोः प्रियसुखयोर्द्वे वा । प्रियप्रियेण ददाति । सुखसुखेन ददाति । अकृच्छ्रे किम् । प्रियः पुत्रः । सुखो रथः । 'यथास्वे यथायथम्' ॥८।१।१४॥ यथास्वभावे यथावर्त्म यथायथं निपात्यते । यथायथं पदार्था[6] ज्ञाताः । यथास्वभावमित्यर्थः । यथायथं यान्ति । यथात्मीयमित्यर्थः । 'द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु' ॥१।१।१५॥ एषु पञ्चस्वर्थेषु द्विशब्दस्य द्वन्द्वमिति निपात्यते । रहस्ये । द्वन्द्वं मन्त्रयते । स्थित्यनतिक्रमे । आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते । माता पुत्रेण पौत्रेण प्रपौत्रेणापीति । व्युत्क्रमणे । द्वन्द्वं व्युत्क्रान्ताः[7] । द्विवर्गसंबन्धेन भिन्ना[8] इत्यर्थः । यज्ञपात्रप्रयोगे । द्वन्द्वं यज्ञपात्राणि

---

१ °रुत्तरस्य च C. २ आम्भावो वा वाच्य° C ३. अम्भावो $D_2$
४ अन्योन्यम् । परस्परम् । अत्र विसर्जनीयस्य स° $D_1$, अन्योन्य परस्पर-मितरेतर वा $D_2$, $D_3$ ५. वा dropped C ६ पदार्थो ज्ञात° $Bc_3$, $Dc_4$ ७ व्युत्क्रान्त° $Bc_3$, $Dc_4$ ८ भिन्न $Bc_3$, $Dc_4$

इति द्विरुक्तप्रक्रिया ॥[1]

---

प्रयुनक्ति धीर । अभिव्यक्तौ । द्वन्द्वं नारदपर्वतौ । द्वन्द्वं संकर्षण-वासुदेवौ । साहचर्येणाभिव्यक्तावित्यर्थः । अन्यत्रापि द्वन्द्वमित्येतदिष्यते । तदर्थं योगविभागः क्रियते । तेन द्वन्द्वं युद्धम् । द्वयोर्युद्धमित्यर्थः । द्वन्द्वानि सहते । चार्थे द्वन्द्वः ।

इति द्विरुक्तप्रक्रिया ॥

भाष्यवृत्तिहरिग्रन्थतद्व्याख्यामर्मवेदिनः ।
कौतुकाक्रान्तमनसः प्रमोदयतु मत्कृतिः ॥ १ ॥

श्रीरामचन्द्राचार्योक्ते स्पष्टार्थत्वेऽपि चित्रता ।
न मर्मज्ञैः प्रयोज्योऽर्थः स्फटिकाकारगो यथा ॥ २ ॥

पदे वाक्ये प्रमाणे च तत्त्वज्ञं ज्ञातृसम्मतम् ।
रामचन्द्राचार्यसूरेरन्यं नोपलभामहे ॥ ३ ॥

येन व्याकरणार्णवैकतरणिः सा प्रक्रियाकौमुदी ।
वेदान्तानुमता च वैष्णवमतप्रसिद्धान्तसद्दीपिका ॥
कालज्ञानविधौ व्यधायि विबुधानन्दिप्रबन्धत्रयं ।
कृष्णाचार्यसुतः स नः सुखयतु श्रीरामचन्द्रो गुरुः ॥ ४ ॥

---

१ इति ˚प्रक्रिया dropped O; इति द्विरुक्तप्र˚ D4 २ After it— समाप्ता D3 ३ स्पष्टार्थत्वे विचित्रता Do1, स्पष्टार्थत्वे विचित्रता Dc2, Bc1, Dc3 ४ वेदमता च वैष्णव˚ Do1, Do2, Do3, Bo1

इति[1] श्री[2]रामचन्द्राचार्यविरचितायां
प्रक्रियाकौमुद्यां [3]सुबन्तप्रक्रिया ॥[4]

---

इति ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे सुविशदमगमत् तत् सुबन्तं [5]समाप्तिम् ॥[6]

---

१. इति श्रीसकलसदागमचणश्रीराम° $D_3$, $D_5$, $B_1$ २. श्री dropped P, श्रीमद्रामचन्द्राचार्य° $D_1$. ३. सुबन्तं समाप्तमिति । $D_2$; सुबन्त समाप्तम् । श्रीरस्तु। $D_4$ ४ After it–समाप्तेयम् C, सुबन्त समाप्तम् । श्रीरस्तु । शुभ भवतु । कल्याणमस्तु । श्रीः · श्रीः $D_1$, सुबन्त समाप्तम् । श्रीरस्तु । श्रीः। ओं नम । $B_2$, P has सुबन्त समाप्तम्।; After सुबन्तप्रक्रिया $B_1$ has—समाप्तमिति । छ । यादृश पुस्तकं दृष्ट्वा तादृशं लिखितं मया । यदि शुद्धमशुद्ध वा मम दोषो न दीयते ॥ शुभ भवतु । कल्याणमस्तु । लेखकपाठकयोः ।, at the end—इति श्रीरामचन्द्रविरचिताया प्रक्रियाकौमुद्यां सुबन्तं समाप्तम् $D_3$ ५ समाप्तम् । $Bc_3$ ६ After this $Dc_1$ has the following:—

श्रीरस्तु । कल्याणमस्तु । इति श्रीप्रक्रियाकौमुदीये प्रसादः समाप्तः ॥ श्रीरस्तु। श्रीकल्याणमस्तु ॥ श्रीरस्तु ।

स्वस्ति सवत् १६०६ वर्षे श्रावणवदि १० रवौ अद्येह श्रीतापीतटे सूर्यपुरे लिखितोयं प्रसाद । समाप्तमिति । श्रीः ।

यादृशं पुस्तकं वीक्ष्य शोधनीयं सदा बुधैः ।
हीनाधिक्यै स्वरैर्वर्णैरस्माकं दूषणं न हि ॥ १ ॥
यादृश पुस्तके दृष्टं तादृश लिखित मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ २ ॥
यावल्लवणसमुद्रो यावन्नक्षत्रमण्डितो मेरुः ।
यावद् भास्करचन्द्रो तावदिद पुस्तक जयतु ॥ ३ ॥
श्रीरस्तु । लेखकपाठकयो कल्याणमस्तु ॥ श्री ॥ श्री ॥

$Dc_2$ has —

श्रीरस्तु । मङ्गलमस्तु । लेखक विठलकासीवासी रजपुतः ॥ सवत १६४१ समए अषाढ सुदि द्वादसी वासवीहफइ । श्रीविश्वनाथ । कलभैरव अय नमः ॥ रामचन्द्र राम ॥

$Bc_3$ has—सवत् १५६० वर्षे पौष मासे शुक्लपक्षे ११ तिथौ । लिखितमिदम्। शुभं भवतु ।